

उपराष्ट्रपतिभवने दिल्लीनगरे 'शारदा' द्वादश-वर्षारम्भोत्सवे (२७-१-१९७१) सर्वैः संस्कृतज्ञैः सामोदं साभिनन्दनं प्रशंसिताः श्रीविवेकानन्दचरित-लेखकाः डॉ. गजानन बाळकृष्ण पळसुले महोदयाः। तस्मिन् एव मङ्गलक्षणे उपराष्ट्राध्यक्षाः डॉ. गोपालस्वरूप पाठक-महोदयाः मानचिह्न त्वेन मैसूरीयम् अङ्गवस्त्रं विशेषं समर्प्य डॉ. पळसुले महोदय-सत्कृतिं कुर्वाणाः अस्मिन् छायाचित्रे दृश्यन्ते । हार्दम् अभिनन्दनं डॉ. पळसुले अण्णारायाणां संस्कृत-सेवकोत्तमानाम् ।

संपादकः

फेब्रुवारी-मार्च १९७१
फाल्गुन शके १८९२

शारदा



**उपराष्ट्रपतिभ्यः**

**स्वा ग त म्**

**उपराष्ट्रपतिभवने**

**'शारदा'-समारोहे**

डॉ. गोपालस्वरूप पाठकः

'शारदा'-संपादकः

सौ. शारदा गाडगीळ

सौ. गङ्गूताई पळसुले

पुणें) महाराष्ट्रराज्यशासन-भारतकेन्द्रशासन-पुरस्कृता विश्वप्रिया (मुम्बई
शृङ्गेरी-शारदापीठ-श्रीशंकराचार्यैः संस्कृत-'शंकरकृपा'-त्वेन स्वीकृता

सौर १६ फाल्गुन १८९२ ७ मार्च १९७१




वर्षम् १२ अङ्काः ८-९ १०

वार्षिकमूल्यम् रू. १० ❀ अस्य अङ्कस्य रू. १-५०

## वैदिकं मङ्गलम्

ऋचो अक्षरे परमे व्योमन्
यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति
य इत् तद् विदुस्त इमे समासते ॥

Upon which song-syllable, the supreme position, all the gods have been taking their seats, what can he do with the song who does not know that ? They who know this, verily, these sit together.

## अवेस्ता–मङ्गलम्

अष वहिश्त अष स्त्रअेश्त दर्ॅसाम थ्वा ।
पइरि थ्वा जम्याम हर्ॅम् थ्वा हख्म ।

Through the best Righteousness, through the highest Righteousness, may we catch sight of Thee, may we approach Thee, may we be in Perfect union with Thee.

संपादकीयम्—

# पुनरपि जिता दिल्ली 'शारदा'-पत्रेण

शारदा। द्वादशवर्षं प्रविष्टा। गते दीपावली-महोत्सवे। सिद्धीकृतं 'श्रीविवेकानन्द-विशेषाङ्क-रत्नं महता प्रयासेन प्रचुरेण द्रव्यव्ययेन च। तत्प्रकाशनोत्सवः दिल्ली राजधानी-नगरे। उपराष्ट्रपति-निवास-भवने। २७ जानेवारी १९७१ दिने। रम्ये गोरज-मुहूर्ते। अस्य समारोहस्य यशः संस्कृतक्षेत्रे अनितरसाधारणम्।

संस्कृत-प्रकाशनं नाम महती तपश्चर्या। असह्यः तत्र द्रव्यव्ययः प्रधानं काठिन्यम्। परं 'शारदा'-कारैः विज्ञापन-संपादनेन तत्रत्यः भारांशः न्यूनीक्रियते। चकिताः भवन्ति सामाजिकाः संस्कृत-पत्रिकायां विज्ञापन-यशस्वितां साक्षात्कृत्य। पञ्च-षट्-सहस्रमितं द्रव्यं विज्ञापनेभ्यः प्राप्तुं शक्यते? अहो आश्चर्यम्। इति श्रूयते प्रतिक्रिया। परं तत्र श्रेयोभागिता व्यावसायिकानां शासकानां च संस्कृतानुरागस्य। अयम् अनुरागः प्रयत्न-सातत्येन जायते। 'शारदा' काराः यत्नदेवं सश्रद्धं पूजयन्ति सातत्येन। तत्फलितम् इदम्।

सिद्धीकृते अपि द्रव्ये यत् प्रकाशनीयं तद् रत्नम् अपि कुत्र चित् प्रयत्नेन संपादनीयं भवति। इयं चिन्ता निर्मूलं नीता सांप्रतिके वर्षे भारत-वाणी संपादकत्वे अपि 'शारदा'-मित्रोत्तमैः डॉ. पळसुले अण्णारायैः। प्रकाशकसमम् एव लेखकमाहात्म्यं मन्वानैः 'शारदा'-कारैः साग्रहं प्रार्थितः सव्यसाची संस्कृत-सारस्वतः डॉ. पळसुले-महोदयः सपत्नीकः दिल्लीम् आगन्तुं सत्कीर्त्तिं च मधुरीकर्तुम्। उदारचित्तैः तैः प्रार्थना सा बहुमानिता। समारोहस्य साफल्यम् इदं मन्यामहे।

उपराष्ट्रपतिसचिवः श्री. फडके विनायकरायः 'शारदा'-भक्तोत्तमः। तत्साहाय्येन समारोहः सुसंपन्नः। परं तत्र समुपस्थितेषु वक्तृविशेषेषु च डॉ. लोकेशः, डॉ. रामकरण-शर्मा, वित्तसचिवः श्री. यार्दी मधुकररायः, डॉ. नवाथे दत्तोपन्तः, श्री. दर्याविप्रसाद शर्मा इत्यादीनाम् उपस्थित्या मार्गदर्शनेन च धन्या शारदा। धन्याः 'शारदा' काराः।

शिक्षाराज्यमन्त्रिणां भक्तदर्शन महोदयानां स्वयम् उपराष्ट्राध्यक्ष-चरणानां डॉ. पाठकानां प्राशस्त्यं, प्रोत्साहनं, मार्गदर्शनं नाम प्रसाद-चिह्नानि पुरःफलानि इत्येव मन्यामहे। प्रार्थयामहे भगवतीं शारदाम्बां श्रीमत्-जगद्गुरूदेवतां च संस्कृत-सेवा-कार्ये निरन्तरायां धियं प्रेरयितुम् इति शम्।

आन्तरभारती—

## कठिण वज्रास भेदूं ऐसे .... वज्रं भेत्तुमपि क्षमाः ।

मऊ मेणाहून आम्ही विष्णुदास
कठिण वज्रास भेदूं ऐसे
मेले जित असों निजोनियां जागे
जो जो जें जें मागे तें तें देऊं
भले तरी देऊं गांडीची लंगोटी
नाठाळाच्या काठी देऊं माथां
मायाबापाहूनि बहु मायावंत
करूं घातपात शत्रुहूनि
अमृत तें काय गोड आम्हांपुढें
विष तें बापुडें कडू किती —तुकारामः

विष्णुदासा वयं तावत् नवनीतात् सुकोमलाः ।
काले तु तादृशे प्राप्ते वज्रं भेत्तुमपि क्षमाः ।।
परलोकगताश्चापि वयमत्र ध्रियामहे ।
गाढनिद्रागताश्चापि जागरूका वयं सदा ।।
अपि कौपीनमुत्सृज्य प्रसन्नाश्चेद् ददीमहि ।
कुर्वीमहि तु तुष्टस्य मूर्ध्नि दण्डेन ताडनम् ।।
पितृभ्योऽपि दयावन्तः शत्रुभ्योऽपि भयंकराः ।
मधुरा अमृताच्चापि तथा तीव्रा विषाद् वयम् ।।

डॉ. ग. बा. पळसुले

## बाबा-ताहेर-काव्यम्....२१

दिले नाजुक बसाँ षीष अम् बे
अगर आहे कषम् अंदेश अम् बे
सर छकम् गर बु खूनीं अजबनीस्त
मु आँदीरम् के दरखूं रीष अम् बे ।।

**आदर्शवत् परमसूक्ष्ममिदं मनो मे**
**शङ्के यदि श्वसिमि दीर्घमिदं प्रभिन्द्यात् ।**
**रक्ताश्रुपूर्णनयनोऽस्मि, न चित्रमेतत्**
**मूलानि यस्य रुधिरे स महीरुहोहम् ।।**

१८–६–३१० गौळीपुरा
गौळा रामय्या वाडा, हैद्राबाद २

न्या. गुण्डेराव हरकारे
निवृत्तः सत्रन्यायाध्यक्षः

## दिल्ली उपराष्ट्रपति-निवासे 'शारदा'-महोत्सवः
## राजधान्यां राजमान्या 'शारदा'-संस्कृत-सेवा

(शारदा-राजधानी-प्रतिनिधितः)

**राजधानी दिल्ली – दि. २७ जानेवारी १९७१ –**

"पं. गाडगीळ वसन्तरायैः संस्कृत-पत्र-क्षेत्रे विहितां तपस्यां साक्षात्कृत्य मन्ये वयं वर्तामहे तस्मिन् एव प्राचीने वैदिक-भारते तस्मिन् एव महर्षीणां पवित्रे कालखण्डे। 'शारदा'काराणां संस्कृत-विद्या-सेवा ऋषिजीवनं नः स्मारयति। एतादृशाः संस्कृतसेवकाः संप्रति भारतवर्षे अस्माभिः अपेक्ष्यन्ते। महान् आदर्शः स्थापितः 'शारदा'कारैः संस्कृत-प्रसारस्य। साभिनन्दनं समर्थ्यते तेषां कार्यम् इदम् अस्माभिः।" इति ससंतोषं प्रकटीकृतः स्वात्मा उपराष्ट्रपतिभिः डॉ. पाठक गोपालस्वरूपैः 'शारदा'-द्वादश-वार्षिकोत्सव-निमित्तेन संयोजिते 'श्रीविवेकानन्द-चरित'-प्रकाशन-समारोहे।

### विवेकानन्द-चरितस्य प्रकाशनोत्सवः

शारदीये द्वादशवर्षारम्भे माससप्तकं रूप्यक-सप्तसाहस्रीं च व्ययीकृत्य सिद्धीकृतस्य, डॉ. पळसुले गजाननरायैः स्वीयं शारीरकम् अस्वास्थ्यम् अविगणय्य श्रद्धा-प्रातिभ-बलेन अक्षरीकृतस्य, २५० पृष्ठ-विस्तारस्य, १८ अध्यायरत्न-मण्डितस्य श्रीविवेकानन्द-चरितस्य प्रकाशनम् एव वैशिष्ट्यं राजधानीस्थे उपराष्ट्रपतिभवने संयोजितस्य अस्य मधुरस्य भव्यस्य च समारोहस्य। डॉ. पळसुले गजाननरायः सपत्नीकः (सौ. गङ्गूताई पळसुले), डॉ. विनायकशास्त्री पराञ्जपे, 'शारदा'-मुद्रण-सिद्धि-मन्दिरस्य सेवकः श्री. उल्हे रामभाऊ, भाण्डारकर-प्राच्य-विद्या-मन्दिरस्थः श्री. ईश्वर रामचन्द्र वाळवेकरः सपत्नीकः (सौ. शालिनी वाळवेकर), शारदा-संपादकात्मजौ आयुष्मान् गिरीशः, आयुष्मान् श्रीवर्धनः, तयोर्माता सौ. शारदादेवी-एतावता शारदा-कुटुम्ब-परिवारेण सह 'शारदा'-संपादकाः प्राप्ताः दिल्लीनगरीम् उपराष्ट्रपतिभवने साफल्यं नेतुं समारोहम्।

समारोहस्थलं प्राप्तेषु समारोहाध्यक्षेषु शिक्षाराज्यमन्त्रिषु श्री-भक्तदर्शनेषु विहितं वेदमङ्गलं श्री. लालबहादुर-शास्त्री-राष्ट्रिय-संस्कृत-

विद्यापीठ-प्राध्यापकैः। गिरीश-श्रीवर्धनाभ्यां बटुभ्यां श्राविते अष्टाध्यायी-सूत्रपाठे 'शारदा' कारैः स्वीये स्वागत-भाषणे परिचायितं शारदीयं कार्यम्। विशिष्य "डॉ. पळसुले अण्णारायैः स्वीय-रुग्ण-शय्या-मात्र-मित्रैः महता कष्टेन सिद्धीकृतं चरितरत्नं विवेकानन्द-स्वामिनाम्" इति तैः कृतज्ञता-पुरःसरं विनिवेद्य प्रार्थिताः उपराष्ट्रपतिमहोदयाः सत्कर्तुं चरितकारम्। उपराष्ट्रपतिभिः पुष्पहारस्य मैसूरीय-अङ्गवस्त्रस्य च समर्पणेन संमानिताः डॉ. पळसुले गजाननरायाः तालिकागर्जरेण दुमदुमिते सभागृहे। "दिव्यं श्रीविवेकानन्द-चरितम् एव प्रेरकं तेषां चरित-लेखने" इति सत्कारोत्तरे भाषणे कथितं डॉ. पळसुले महोदयैः।

'शारदा'-मित्रोत्तमेन विश्वख्यातेन संस्कृति-सेवकेन दिल्लीस्थेन डॉ. लोकेशचन्द्रेण (डॉ. रघुवीर-सुपुत्रेण) स्वीये भाषणे भूरि भूरि प्रशंसिताः 'शारदा'-काराणां संस्कृत-प्रसार-प्रयासाः। "मुम्बई-नगरे पं. गाडगीळ वसन्तरायैः '४० घण्टाकाले व्यावहारिकं संस्कृतम्' इति प्रयोगीकृत्य साफल्यं संपादिता योजना विदेशेषु संस्कृताभ्यासोत्सुकैः स्वीकृता भवेत्। अवश्यं ते गच्छन्तु जापान-इण्डोनेशिया-इङ्ग्लण्ड-प्रभृति-राष्ट्रेषु संचारार्थम्" इति निवेदितं तैः। अलिगढ-विश्वविद्यालय-संस्कृतप्राध्यापकः डॉ. केङ्घे चिन्तामणिरायः, डॉ. मण्डनमिश्रः, डॉ. रामकरण शर्मा, पं. स्वामिनाथन् (केन्द्र-शासनस्य संस्कृत-विशेषाधिकारि-द्वयम्) श्री. राजाभाऊ म्हसकर प्रभृतिभिः स्वीयभाषणेषु पुरस्कृते 'शारदा'-संस्कृत-सेवा-कार्ये शिक्षा-राज्यमन्त्रिभिः प्रोक्तम् "पुण्यपत्तनं गतेन मया नचिरमेव प्रत्यक्षीकृतं 'शारदा'-कार्यम्। स्वल्पीयसि ४० घण्टाकाले कस्यापि संस्कृते वक्तुं लिखितुं च क्षमता-संपादने पं. वसन्तरायैः संपादितं यशः पुरस्क्रियते केन्द्र-शासनेनापि। पत्रव्यवहारेण इयं योजना कार्यान्वितीक्रियते चेत् 'शारदा'-कारैः सानन्दं सिद्धं केन्द्रशासनं तत्साहाय्यं कर्तुम्।"

डॉ. परांजपे विनायकरायैः समर्पितेषु धन्यवादेषु सौ. गाडगीळ शारदादेव्या श्राविता डॉ. पळसुले-विरचिता गीतिः संस्कृत-मन्दाकिनी। मधुरेण अल्पाहारेण (उपराष्ट्रपति-सचिवालय-संयोजितेन) संपन्नतां गतः समारोह-विशेषः संस्मरणीयः अयम्।

* * *

# गुजरातराज्ये विद्यापूजनम्

गुजरात - शासनेन विहितः शुभारम्भः विद्यापूजनस्य गते संस्कृतोत्सवे यत्र 'शारदा'-काराः सादरं निमन्त्रिताः शासनेन स्व-प्रयत्नसाफल्यानुभवार्थम् । अत्रत्ये चित्रे क्रमशः (वामतः)–

(१) वेदशास्त्रसंपन्न व्यंकटेश बालकृष्ण जोशी (बडोदा) (२) पण्डितपंचानन श्रीबद्रीनाथ काशीनाथ शास्त्री (३) शास्त्रीश्री रेवाशंकर बेचरभाई सामवेदी

–– इति विद्वत्-त्रयस्य पूजनं कुर्वाणः गुर्जरदेश - राज्यपालः श्रीश्रीमन्नारायणः ।





प्रवचनरत्न जोशी काशीनाथशास्त्रिणः सातत्येन २५ वर्षाणि भागवतमहापुराण-प्रवचन-सेवा-कार्यार्थं सत्कृताः श्रीफलमहावस्त्रसमर्पणेन योगिराजैः पू. गुळवणी वामनरायैः भव्य-समारोहे ।

---

श्रीमत्परमहंसपरिव्राजकाचार्यवर्यत्यादिविविधबिरुदावलीविभूषित-
श्रीपुरीजगन्नाथपूर्वाम्नायपीठाधीश्वर-जगद्गुरु-

## श्री श्रीनिरञ्जनदेवतीर्थमहास्वामिनां

चरणारविन्दयोः साष्टाङ्गप्रणतिपूर्वकं समर्पितेयं विज्ञप्तिपत्रिका

**परमपूज्याः,**

विदितमेवैतत् लोकानां, यदाचार्यभगवत्पादैः आसेतोराहिमाचलं सर्वत्र भारते सञ्चर्य धर्ममार्गप्रतिष्ठा कृतेति । भवन्तोऽपि भारते सर्वत्र सनातनार्यधर्मप्रतिष्ठापनाय सञ्चरन्तः भगवत्पादप्रदर्शितां सरणिमनुगच्छन्तीति नितरां मोदामहे ।

**संयमिसार्वभौमाः,**

निखिलस्यापि जगतो मार्गदर्शिका भारतीया संस्कृतिः । अत्रैव सर्वमतसामरस्यमन्तर्गतम् । ईदृशसंस्कृतिप्रचाराय तत्रभवन्तो भवन्तः अविश्रमं परिश्राम्यन्तीति समेषामस्माकं भारतीयानां सुतरां प्रमोदस्थानम् ।

**पूर्वाम्नायपीठाधीश्वराः,**

लौकिकेषु, अन्यत्रापि दर्शनेषु भवतां पाण्डिती सर्वैः सशिरःकम्पमाद्रियमाणा पण्डितजनतामाश्चर्यपदे निमग्नां विधत्ते । न केवलं गैर्वाण्यां, इतरासु च भारतीयभाषासु निरर्गलं भागीरथीप्रवाहवत् प्रवहन्ती भवतां वाग्वैखरी कति कति पण्डितान् न मुग्धान् चकार ?

**यतिचक्रवर्तिनः,**

कल्याणनगरस्थायाः भारतीय-गीर्वाणप्रौढविद्याभिवर्धिनी-महापाठशालायाः वज्रमहोत्सवेऽस्मिन् सन्निधाय स्वीयैः वाग्विलासैरनुगृहीता अत्रत्या आस्तिकजनता धन्यधन्येत्यत्र नास्ति संशीतिलेशोऽपि ।

**जगद्गुरवः,**

सुरसरस्वतीप्रसाराय, परमकरुणया स्थापितेयं श्री सुरसरस्वती सभा, शृङ्गगिरि-श्रीशारदापीठाधीश्वरैः श्री श्रीमदभिनवविद्यातीर्थमहास्वामिभिः । निरन्तरायमियं सभा उत्तरोत्तरं वर्धमाना भारतीयेषु सर्वेषु सुरसरस्वत्या अध्ययने श्रद्धामभिवर्धयन्ती विराजतामिति भवन्तस्तत्रभवन्तः अनुगृह्णन्त्विति आशास्महे ।

साधारण फाल्गुन शुक्ल त्रयोदशी
कल्याणनगरी (बेङ्गलूरु)

अध्यक्षः सदस्याश्च
**श्री सुरसरस्वती सभा, शृङ्गेरि**

# सनक्षत्रे नभसीव चन्द्रमाः भवन्तः प्रभाभासुराः

माघ शु. ७।२०२७ ।। श्रीहरिः ।। गाजर फली
मङ्गलवारः जामनगरम् (गुर्जरराज्यम्)

अयि सुरभारतीसेवार्थं निरन्तरं बद्धपरिकराः विद्वन्मूर्धन्याः श्री. गजानन बा. पळसुलेमहोदयाः ! सादरं प्रणामः ।

प्राप्तः 'शारदा'याः श्रीविवेकानन्द-विशेषाङ्कः, तत्र च दृष्टं भवल्लिखितं विवेकानन्द-चरितम् । सुरगिरि-सिद्धहस्तानां भवतां ग्रन्थेऽस्मिन् सुतरां रसास्वादो भवति मादृशानां कवीनाम् अपि ।

अद्याहं विपुलकार्यमग्न आसम् । तेषां तेषां कार्याणाम् आरम्भात् पूर्वं केवलं चित्रदर्शनार्थं, विषयदर्शनार्थं च दृष्टं विवेकानन्द-चरितम् । किन्तु यत्र दृष्टिः पतिता तत्र भवदीया गद्यशैली बलादाकृष्टवती मम हृदयम् । होराद्वयात्मकः कालः कथं व्यतीतः इति ज्ञातुं न अपारयम् ।

गुर्जरभाषायां विवेकानन्दचरितं मया पूर्वं पठितम् आसीत् । अतः श्रीस्वामिवर्याणां जीवनप्रसङ्गाः न मम अपरिचिताः आसन् । किन्तु तेषां प्रसङ्गानां वर्णने या भवदीया कवित्वशक्तिः सा खलु नवीना एव । तथाहि १३० तमे पृष्ठे 'सर्वधर्मपरिषदः श्वस्तनीयः अयं सम्राट् पूर्वरात्रौ एवं रेलयानस्थानके आकाशस्य अधस्तात् शैत्येन सिमसिमायमानगात्रः अस्वपीत् ।'—एतादृशं वाक्यं तु बहुवारं श्रुतम्; किन्तु तदनन्तरमेव लिखितम्-"अथ वा 'शय्या भूमितलं दिशोऽपि वसनं' येषां, तेषां परिव्राजकानाम् अस्मदादिहृदय-विदारिणी अपि का नाम इयं कथा ?"—इति यद् वाक्यं तन्नूनं भृशं रसास्वादं जनयति ।

बहुभिर्दिनैर्यस्य प्रतीक्षां कुर्वाण आसम् तद् भवल्लिखितं श्रीविवेकानन्द-चरितम् मया 'शारदा'द्वारा लब्धम् इति अहो भाग्यं मम । एवं यदा यदा भवन्तः किमपि पुस्तकं लिखेयुस्तदाऽवश्यमत्र प्रहेयमिति बद्धाञ्जलिः सन् प्रार्थये । भवल्लेखन-गत-रसमास्वाद्य आस्वाद्य मम तु तृप्तिरेव न भवति । लेखकानां समाजे, सनक्षत्रे नभसीव चन्द्रमाः भवन्तः विशिष्ट-प्रभाभासुराः सन्ति । किन्तु असंस्कृतज्ञत्वाद् भारतीयबहुजनसमाजस्य न

भवद्गुणगरिमाणं साक्षात्कर्तुं पारयति साधारणः कश्चिज्जनः। किन्तु आशास्महे —

पुनर्युगपरिवर्तनं भविष्यति। संस्कृतभाषा संसारस्य गेहे गेहे पठिष्यते। तदा च न केवलं भारते, अपि तु संपूर्णे विश्वे भवदीया भारती समुल्लसिष्यति। भवदीय-लेखनप्रावीण्यस्यापि मूल्यं तदा भविष्यति।

भूयान् परिश्रमः कृतः श्रीमद्भिः खलु विवेकानन्द-चरिताख्यग्रन्थ-लेखने यतः न कुत्रापि प्रमाणरहिता काऽपि घटना दृश्यते। सप्रमाणम् अपि अपरिमितं रसं जनयन् न इदं भवदीयं गद्यकाव्यं शारदाम्बायाः मुकुटमणि-रिव सुतरां विभाति।

परमयशस्विनो लेखकाः श्रीमन्तो जीवन्तु शरदां शतम्, सदाऽऽरोग्यं च लभन्ताम् इति शुभां कामनां संप्रेष्य, अतृप्त इव, पिपासुरिव हठा-द्विरमामि पत्रलेखनात्।

भवत्स्नेहसुधासिञ्चिताशयः
**शास्त्री रमानाथ ज. द्विवेदी,**
वेदान्ताचार्यः, काव्यपुराणतीर्थः

* * * * * * * * * * * * * * * * * * * * * * * *



* * * * * * * * * * * * * * * * * * * * * * * *

VEN. MARAMBA RATANASARA
Bhandarkar Oriental Research Institute
Poona 4.

# शारदा-रौप्यमहोत्सव-शुभसंदेशः ।

विवेकानन्दनामा स संयमी धर्ममूर्तिमान् ।
क्लेशेभ्यो यो विवेकस्य ददर्शानन्दहेतुताम् ॥
जातिवादाद्विवेकं यो दिदेशानन्दकारणम् ।
विवेकानन्दनामा सोऽखिललोकहिते रतः ॥
असामग्र्या विवेके य आनन्दं दृष्टवान् सुधीः ।
विवेकानन्दनामास्य स्मार्यं सर्वजनैस् सदा ॥
यो दैवीवाङ्नभोमध्ये भानुभूतो विराजते ।
तस्य दाण्डेकराख्यस्याधिपत्ये विदुषः स्थिते ॥
प्रगताध्ययनाबद्धे **केन्द्रे सुरगिरः शुभे ।**
मान्याध्यापकतां **यातः "पूना"यां** विद्वदग्रणीः ॥
स्मारकः परशूलानां हस्तगानां त्रिशूलिनः ।
विध्यति ज्ञानशूलेन योऽजितो वादिनः परान् ॥
पलशूलः कविवरो विवेकानन्दसंज्ञिनः ।
संस्कृतेर्भारतीयाया योऽभूत्प्रतिनिधिर्महान् ॥
स्मारं स्मारं गुणैस्तस्य वशीभूतो लिलेख यत् ।
काव्यं चरितरूपं तत्प्रकाशे मे शुभाशिषः ॥
" परगुणपरमाणून् पर्वतीकृत्य नित्यं ।
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ "
यथा विवेकानन्दः स ख्यातिं यातो महीतले ।
महात्मा पलशूलोऽपि यातु ख्यातिं सदातनीम् ॥
शारदानुग्रहं तस्य कुर्यात्तल्लेखनीगता ।
यायादमरणीयत्वं तत्काव्यं जगतीतले ॥

इत्थं प्रार्थयते पुण्यपत्तने भाण्डारकर-प्राच्य-विद्या-संशोधन-मन्दिरे प्रवसन् जानकीहरणकर्तॄणां देशे महातीर्थजनपदे महारामग्रामवास्तव्यो रत्नसारः शाक्यपुत्रीयो यतिरिति । गतबुद्धाब्दाः २५१४

॥ श्रीः ॥

# "श्रीविवेकानन्दचरितम्"-प्रकाशन-समारोहे वैदिक-संशोधन-मण्डलस्य शुभाशिषः

शारदाकाराणां 'शारदा'-नियतकालिकस्य द्वादशवर्षस्य प्रारम्भोत्सवः विद्वद्वरेण्यानां नीतिन्यायादिशास्त्रनिपुणानां चर्तुदशविद्याचतुष्षष्टिकलाभिमानिनां सदाचारसंपन्नानाम् उदारचरितानाम् परमश्रद्धेयपुरुषवर्याणां पूज्यपादानां डॉ. गोपालस्वरूप पाठक-महोदयानां सभापतित्वेन संपन्नो भवतीति सौभाग्यास्पदमेतत् ।

अस्मिन् शोभने सुमङ्गले समये शारदा-गौरव-ग्रन्थ-मालायाः २५ तमं श्रीविवेकानन्दचरितनामकं दिव्यं पुष्पं गीर्वाणवाण्यां संस्कृत-भाषा-रसिकानाम् आमोदाय परितोषाय च प्रकाशितं स्यादिति समयोचितमेतत् ।

गीर्वाण-भारती 'चोदयित्री सूनृतानां चेतन्ती सुमतीनाम्' खलु । अनाद्यनन्ता सकलार्यभाषाणाम् आदिजननी गीर्वाणवाणी न केवलं प्राचीन-विविधाभ्युदय-निःश्रेयससंपन्नानां शास्त्राणां प्रसवित्री प्रचोदयित्री सर्वरस-संपृक्ता च, अपि तु आधुनिकानामपि विज्ञानादि-विविध-नूतनानां शास्त्राणां सम्यगर्थप्रकाशप्रभवा हि ।

एवंगुणविशिष्टायां गीर्वाणवाण्यां सहज-सुलभया प्रासादिकशैल्या श्रीमद्भिः गजाननराय पळसुलेमहाभागैः सिद्धहस्तेन प्रकटीकृतं लोक-संग्रहात्मकं 'श्रीविवेकानन्दचरितम्' गीर्वाणवाणी रसिकानाम्. . .

"आमोदाय प्रमोदाय परितोषाय वा सदा ।
पौनःपुन्यप्रसादाय संतोषाय भवेच्च वै ॥"

इति महती श्रद्धा नश्चेतसि ।

गीर्वाणवागर्थप्रतिपत्त्यनुभूत्यै यद्यपि भौतिकशरीरेण तत्रोपस्थितिः अक्षमा तथापि अस्मिन् गोरजसमये गोपालस्वरूपकं वायुमण्डलं अनुपस्थितानां सर्वेषां शरीरान्तःसञ्चारिप्राणाय स्मरणेनैव प्रचोदकं प्रबोधकं प्रेरणास्पदं हि स्यात् ।

ग्रामस्थाः सन्तु नगरस्थाः वा भवन्तु ये दुर्बलाः असमर्थाश्च तेषां दारिद्र्य-निर्मूलनार्थं सहकारिक्षेत्रद्वारा वयं सातत्येन प्रयतनशीलाः।

## महाराष्ट्र-राज्य-सहकारी-अधिकोषः मर्यादितः

(दि महाराष्ट्र स्टेट को-ऑपरेटिव्ह बॅङ्क लिमिटेड)

केन्द्रकार्यालयः
९ बेंक हाऊस लेन
फोर्ट, मुंबई १



प्रादेशिक-कार्यालयः
महाल, नागपुरम्

भाग-धनं निधिश्च – रु. १५ कोटयधिकम्
सर्वं न्यासधनम् – रु. ७५ कोटयधिकम्
सर्वम् ऋणधनम् – रु. १०६ कोटयधिकम्
सर्वः संचारी निधिः – रु. १४२ कोटयधिकम्

सामान्यातिसामान्यजनस्य सदैव हितचिन्तनपरः
सर्वश्रेष्ठः सहकारी अधिकोषः।

* * * * * * * * * * * * * * * * * * * * * * * * *

" समानीव आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति ॥ " (ऋग्वेदः)
" आविश् नाओ अन्सरॅ हॅन्तू।
नॅमख्वइतीश् चिथ्राओ रातयो ॥ "
( आविष्कुरु नश्चेतांसि मनांसि च )

Unto our hearts and minds make manifest the duty and the reverence due to you. अवेस्ता यस्न हा ३३–७

" इति शम् "

कार्यवाहः
वैदिक संशोधन मण्डलम्, पुणे ९

भावत्कः
नारायण श्रीपाद सोनटक्के
२३-१-७१

॥ श्रीः ॥

प. पू. गुरुचरणेभ्यः, पं. गाडगीळ वसन्तरायेभ्यः

साष्टाङ्गपातेन सश्रद्धं नमो नमः ।

भवतां निमन्त्रणं प्राप्तम् । परं मुम्बापुरीतः दिल्लीनगरम् अतिदूरम् । अतः शारदा-गौरव-ग्रन्थ-मालायाः पञ्चविंशतितमस्य पुष्पस्य प्रकाशनोत्सवे उपस्थातुम् असमर्थः अस्मि । अनेन पत्ररूपेण एव मम उपस्थितिः मन्तव्या इति मनसा विज्ञापना ।

भवतां ग्रन्थमालायाः पञ्चविंशतितमस्य लेखकाः डॉ. **गजाननराय-पळसुले** महाभागाः मम परिचिताः । संस्कृतभाषा सुलभा विद्यते इति प्रत्यक्षीकर्तुम् एव तेषां लेखनसरणी भवति इति मे मतिः । अत एव 'श्रीविवेकानन्द-चरितम्' इति ग्रन्थः अपि डॉ. पळसुले महाभागानाम् इमं विशेषं स्पष्टयति इति निःसंशयम् ।

तथा च इयम् अनन्यसामान्यपुरुषस्य जीवनी, असामान्य-प्रतिभा-सम्पन्न-लेखकस्य लेखनपद्धतिः सर्वश्रेष्ठ-संपादकस्य शारदा, इति अस्मिन् चरिते त्रिवेणीसङ्गमः एव जातः अस्ति । अतः अयं सङ्गमः सर्वं विश्वं पूतं करोतु इति ईशचरणेषु नमाजसमये अपि प्रार्थये ।

निमन्त्रणेन उपकृतोऽस्मि ।

पौष १३, १८९२
दि. २५-१-१९७१

भवदीयः छात्रः
**गुलामदस्तगीर बिराजदार**

# भवितव्यस्य 'शारदा'-साहस-प्रशस्तिः

## 'शारदा' – ( संस्कृत ) पत्रस्य अभिनन्दनम्

संस्कृत-पत्रकारितायाः यशस्विजीवने यानि संस्कृत-भवितव्यम् सदृशानि अंगुलिमेयानि पत्राणि विलसन्ति तेषु शारदा-पाक्षिकस्य स्थानम् उच्चतरम्। तेन पत्रेण साम्प्रतं द्वादशे वर्षे प्रवेशः कृतः। पत्रस्य अस्य अङ्काः पुस्तकरूपेण प्रायः प्रकाश्यन्ते अतः न खलु नियमेन पाक्षिकः एव अस्य आविर्भावः। तथापि पृष्ठसंख्यया, रोचकत्वेन, संस्कृत-प्रचार-दृष्ट्या, आधुनिकता-स्वीकारेण च मोहकं, लोकप्रियं च इदं पत्रम् इति वक्तुं शक्यते। व्यावहारिकदृष्ट्या अर्थकरत्वम् अस्य न तावत् जानीमहे परं विज्ञापनानि तेभ्यः तेभ्यः शासनेभ्यः, कर्मान्तेभ्यः, अधिकोषेभ्यः, वाणिज्य-संस्थाभ्यः अङ्केषु प्रकाश्यन्ते इति अभिनन्दनीयम्। अस्य नववर्षस्य आदिमं संयुक्ताङ्कत्रयम् एकत्रनिबद्धं ललितैः सुबोधैः लेखैः अलङ्कृतं, डॉ. ग. बा. पळसुले-महोदय-लिखितेन, २३२ पृष्ठात्मकेन श्रीविवेकानन्द-चरितेन च युतं मासात् प्राक् प्राप्तं दृष्ट्वा एव इदम् अभिनन्दनं हार्दिकं क्रियते। एवम् एव समुन्नतिं कुर्वाणं पत्रम् इदम् अभिलष्यते। संस्कृत-मासिकपत्रैः तावत् अस्य आदर्शः अनुकरणीयः इति मन्यामहे। मूल्यं तु अस्य अङ्कस्य दशरूप्यकमितम् ( पत्रस्य वार्षिकशुल्कतुल्यम् )। आगामि-नाम् अङ्कानाम् आगमने उत्सुकततरं जनयति इदं "साहसं" सफलम्। अङ्के अस्मिन् विशेषतः उल्लेखार्हः सौ. विद्युल्लेखालिखितः एड्यार्ड किपलिंगकथायाः अनुवादः ( बिडालः यः अनन्यः चरति ) तथैव च "ऋग्वेदे संतति-नियमनम्" डॉ. ह. रा. दिवेकर संशोधितम्। श्री-विवेकानन्दचरितस्य तु मूल्यम् अमितम् इत्यलम्।

दि. २३-१-७१ 'भवितव्यम्' नागपुरम्

---

# वयं नृलोके खलु भूरिभागाः ।

वयं श्रीउपासनी-कन्याकुमारी-क्षेत्र-वास्तव्याः पञ्चभगिन्यः गताः पुण्यनगरीं पुण्य-रम्य-सुश्राव्य.- अ. भा. संस्कृत-महोत्सवदर्शनार्थम् । दृष्ट्वा महोत्सवं कृतार्थाः। अस्मत्सद्गुरुचरणाः उपासनीमहाराजाः वैदिक-लौकिक-संस्कृते नितान्तं बद्धादराः। तेन च यातम् अस्माभिः वैदिक-लौकिक-संस्कृत-सङ्गमसंमेलनमहोत्सवे । स्नातं स्वान्तेन निर्मलज्ञानजलप्रवाहे। दूरीकृतम् अज्ञानतिमिरपातकम् । येन अज्ञान-आदीनवेन न ज्ञातः अलं महिमा एतावान् एतावन्तं कालं सुरभारतीसरितः सुविस्तृतः, भारतभुवः समृद्ध-सौभाग्य-रूपः । सर्वे-र्वाः वयं नूनं नृलोके भूरिभागाः येषां ईदृशी सर्वभाषासु मुख्या मधुरा दिव्या गीर्वाणभारती प्रसेविता अस्मद्भारत-राष्ट्रे। सा च इयं कल्याणी सूनृता सुरभारती श्रुतेन दृष्टेन यत्नेन च उपासिता ध्रुवं कम् अपि अनुग्रहं करोति ।

निगमकल्पतरोः आस्वादितं फलं मधुरवेदघोषयुतं, काव्यनाटकादि-श्रवणज-रस-समन्वितं च । दृष्टः सुविस्तृतः विस्तारः अतिप्रत्नस्य अपि सदा-नूत्नस्य वेदतरोः बहुशाखासंवलितः। यस्मिन् वैदिक-लौकिक-संस्कृत-विद्वद्विदुषां विश्वम् एकनीडं भूतं, यस्य च शाखासहस्रेषु एकविंशतिधा बाह्वृच्यैन भूयते, स्तूयते च बहुधा देवताव्रातः - यासु इयं पठिता ऋक्—

**(१) स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव ।**
**पुनर्ददताऽघ्नता जानता सङ्गमेमहि** ।। ऋग्वेदे ५।५१।१५

एकशतम् अध्वर्युशाखाविस्तारः, विविधकर्मकाण्डपरः विमल-सुखद-कर्मप्रेरणापरश्च,

**(२) सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सँ शिवेन् ।**
**त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम्** ।।
यजु. ०।२।२४

निखिलवेदानां 'सहस्रवर्त्मा सामवेदोऽस्मि इति ह आह स सहस्र-शीर्षा सहस्राक्षः सहस्रपात् परमात्मा स्वयमेव-आह श्रुतिः नियमान् सभादिप्रसङ्गोचितान्

**(३) नमः सखिभ्यः पूर्वसद्भ्यो नमः साकं निषेभ्यः ।**
**युञ्जे वाच ँ शतपदीम्** ।। सामवेदे उत्तरार्चिके । ९।२।७

नवधा विभक्तस्य अथर्वणस्य स्तुतये किं नवपदं उपयुज्यते ? श्रुतिः इयं वेदवाणीं वेदादिविद्यादातृकर्मफलं च प्रस्तौति प्रस्तुतर्चि ।

(४) **सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने ।**
**सरस्वतीं सुकृतो हवन्ते सरस्वती दाशुषे वार्यं दात् ॥**
अथर्ववेदे १८।४।४५

एवं सूनृतानां चोदयित्रीं सुमतीनां चेतन्तीं देवीं सरस्वतीं धीनाम् अवित्रीं सर्वकार्यारम्भमङ्गले वैदिकसंशोधनमण्डले ग्रन्थप्रकाशनसमये प्रसेवितुं लब्धः स्वर्णावसरः । श्रुतः श्रुतिमहिमा भारतभू-भूषात्मकः वेदतात्पर्यप्रकाशप्रदः प्रकाशकालीनभाषणसमये । हन्त ! नितान्तहर्षः एतस्मात् । मत्स्यन्यायेन सबलेभ्यः ज्ञानाभावात् दुर्बलानाम् अस्माकं शतमुखः सहस्रमुखः विनिपातः मा भूदिति गङ्गान्यायेन स्तोकम् अधिकं स्वशक्तनुसारम् अध्येयं संस्कृतं सर्वैः । शासनाधिकारिभिः देयम् उचितम् उच्चासनं चास्यै गिरां देव्यै सर्वभाषाजनन्यै ।

तथा भाषणप्रतियोगिता विविधविषयात्मिका । नूनम् अन्त्याक्षरी-स्पर्धा वर्धापनहेतुः काव्याद्यध्ययनप्रेरणायाः अनधीतसंस्कृतानाम् अधीतिनां तु प्रमोदः बकुलमञ्जरीगलदमन्दमाध्वीझरीधुरीणपदरीतिभणिति-आस्वादजः अनिर्वचनीयः । मुखं व्याकरणं व्याकृतं, मीमांसादि-शास्त्रचर्चा अपेक्ष्यते एव संस्कृतज्ञैः ।

अपि च कस्य खलु सहृदयस्य अविदितं एतत् स्यात् ?-यत् कृत्याकृत्य प्रवृत्तिनिवृत्त्युपदेशकं

**धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।**
**करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥**

श्रुतिपथमगात् अगाधसाहित्यरसस्पर्धा बहुधा विस्तारिता परीक्षिता । एवम् आदितः आहृत्य परिणतधीनां कृते चतुर्वेदशाखापाठः प्रकृति-विकृतिसहितः । तत्रापि दर्शितकौशलाः केचन वैदिकाः धियः स्मृतिचमत्कृतौ । यदुपासनया सुकुमारधीनां सुधीत्वं धीमतां सभायां स्वान्तःसुखाय वाक्पाटवलाभाय या भवति सा गिरां देवी साहित्यद्वारा प्रसेविता । अहो नु खलु आश्चर्यं तत्रापि वैयाकरणैः प्रादर्शि पं. आठलेकरमहाशयैः अष्टाध्यायी-अध्याय-पाद-सूत्र-क्रमम् अङ्कान्वितं कुर्वद्भिः । सुदुर्लभम् इदं दृष्ट्वा हृष्टं जनैः तुष्टं चकितं च । विविधाशयव्यक्तिकर्तृ कविसम्मेलनं द्विविधम् आश्चर्यकरं हर्षकरं, काव्य-आशय-ज्ञान-द्वारा श्राव्य-काव्यस्य सुश्राव्यत्वात् च ।

* * * * * * * * * * * * * * * * * * * * * * * * * * *

।। श्रीः ।।　　　　बेङ्गलूरु-नगरम्

४ जानेवारी १९७१

श्रीमतां तत्रभवतां

पं. वसन्त गाडगीळमहोदयानां सन्निधौ सप्रश्रयं प्रणतयः ।

मान्याः ।

तत्र उद्यानप्रासादे भवदुपकल्पितेन आतिथ्येन, भवतां सौजन्य-पूर्णव्यवहारेण च मुग्धोऽहं न कदापि विस्मरेयम् । पुण्यपत्तनात् प्रस्थान-समये वयं सर्वेऽपि भवतः अस्मराम । परं तदानीं भवद्दर्शनं नालभामहि ।

'शारदा' पत्रिकायाः ग्राहको भवितुम् इच्छामि ।

श्रीसुब्रह्मण्यस्वामिमन्दिरम्　　　　भवदीयः

विश्वेश्वरपुरम्, बेङ्गलूरु ४　　　　य. कृष्णशर्मा

* * * * * * * * * * * * * * * * * * * * * * * * * * *

ततश्च वक्तव्यं चेत् वर्णनीयं चेदित्थं यत् —

वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं गिरां देवीसेवकानां सेवि-कानां, किं पुनः उपस्थित-जनसमुदाय-भाग्योपचयात् समुदितः सर्वो गुणानां गणः, मुदितः जनसमुदायः । तत्रापि विशेषः-उद्घाटन-प्रयोजन-कथन-पुरस्कार-प्रदान-प्रसङ्ग-प्रदत्त-भाषणानि सुष्ठु बोधकराणि । देशेऽस्मिन् सम्प्राप्ता विबुधमान्यतां सुरवाणी देशे समये समये अन्य-त्रापि सेव्यते । इतः प्राक् जम्मू-राजधानी-तिरुपति-प्रयागेषु सुसंवृत्तः-संस्कृत-महोत्सवः । नूनं तत्रत्यैः अलभ्यसौरभ्यलाभः लब्धः स्यादेव सुरभारती सुरद्रुमसुमनसाम् । तथा इदम् अपि महोत्सवप्रयोजकत्वं महा-राष्ट्रीयाणां नूनम् उपकारकम् । यत्र केन्द्रशासनं संचालकं प्रयोजक कर्तृ 'महाराष्ट्रशासनं महाशयसमृद्धम् आमन्त्रणकर्तृका वा हानिः स्यात् तत्र ? अधुना तु केवलं राज्यायत्तम्, अन्यत्रापि भवेत् विद्यापूजादिः ।

सा हानिस्तन्महच्छिद्रं स मोहः स च विभ्रमः ।
यन्मुहूर्तं क्षणं वापि संस्कृतं नैव सेव्यते ।

ततश्च हे अम्ब, अम्ब सरस्वति ! यथार्थ ज्ञानपानतृषार्ता अहं जग-न्निखिलभाषाजननीं त्वां प्राप्ता शरणं, हे भगवति ! देहि निज-ज्ञानम् । भूयसे मङ्गलाय भद्रं द्रुतं वितर ।

साकुरी　　　　सुभद्रा उपासनी महाराज

('फेब्रुवारी' मासे वाराणसेय-संस्कृत-विश्वविद्यालये विद्वद्गोष्ठ्यां पठितस्य निबन्धस्य संक्षेपः । )

# बौद्ध-पातञ्जल-दर्शनयोः सवितर्कादि-ध्यानविमर्शः

पातञ्जलदर्शने समाधिपादे सवितर्कादिसमापत्तिचतुष्टयं वर्णितम् । तत्र वितर्को नाम स्थूलमालम्बनं चित्तस्येति यत्प्राचीनार्वाचीनैष्टीकाकृद्भिः प्रतिपादितं तदयुक्तमिति प्रदर्शितपूर्वमेवास्माभिः[१] । तथा च 'ता एव सबीजः समाधिः' (यो. सू. १.४६) इति सूत्रेण समाधिसमापत्त्योस्तादात्म्यमभ्युपगम्य सवितर्कादयः समाधेर्भेदा इत्यपि यत्प्रतिपादितं भाष्यादिप्रणेतृभिस्तस्यापि परामर्शोऽन्यत्र कृत एवास्माभिः[२] । अत्र तु तदेतद्द्वयमपि बौद्धदर्शनतुलनया परामृश्य द्रढयितुमीहामहे ।

विदितचरमेवेदं प्रेक्षावतां यत्पातञ्जलदर्शनं बौद्धदर्शनं च हैरण्यगर्भयोगशास्त्रस्य प्राचीनपरम्परामनुसृत्यैव प्रणीते । अश्वघोषविरचिते बुद्धचरिते द्वादशे सर्गेऽराडनाम्ना सांख्ययोगाचार्येण गौतमायोपदिष्टं दर्शनमुपलभ्यते । तेन च मूलहैरण्यगर्भयोगशास्त्रस्य स्वरूपमप्यनुमातुं शक्यते । तत्र हि चत्वारि ध्यानान्यपि वर्णितान्यराडाचार्येण । प्रथमं हि तेषु वितर्कवत् सवितर्कं वा ध्यानम् । तदेतद् वर्णयत्यराडाचार्यः —

**अथो विविक्तं कामेभ्यो व्यापादादिभ्य एव च ।**
**विवेकजमवाप्नोति पूर्वध्यानं वितर्कवत् ॥**
**तच्च ध्यानसुखं प्राप्य तत्तदेव वितर्कयन् ।**
**अपूर्वसुखलाभेन ह्रियते बालिशो जनः ॥**
**शमेनैवंविधेनायं कामद्वेषविगर्हिणा ।**
**ब्रह्मलोकमवाप्नोति परितोषेण वञ्चितः ॥**

**(बु. च. १२–४९ तः ५१)**

यद्यपि नात्रापि वितर्कशब्दस्यार्थः सम्यगुपलभ्यते तथापि 'व्यापादादिभ्य' इति प्रयुक्तोऽत्र शब्दो लक्षणीयोऽस्ति । अस्य विवेचनमग्रे करिष्यत एव ।

---

(१) द्रष्टव्यम् — 'The Concept of Vitarka in the Patanjala-yogashastra,' a paper submitted to A.I.O.C., Jadavpur, 1969.

(२) द्रष्टव्यम् — 'The Concepts of Samadhi and Samapatti in the Patanjala-yogashastra,' being published in Dravid Felicitation Volume, Allahabad, 1971.

निर्वितर्कध्यानस्य वर्णने तु वितर्कशब्दस्य 'स्थूलमालम्बनं चित्तस्ये'ति नैवाभिप्राय इति स्पष्टं ज्ञायत एव। तथा हि वर्णयत्यराडाचार्यः –

**ज्ञात्वा विद्वान् वितर्कांस्तु मनःसंक्षोभकारकान्।**
**तद्वियुक्तमवाप्नोति ध्यानं प्रीतिसुखान्वितम् ॥**

(बु. च. १२-५२)

अत्र हि 'वितर्कानि'इति बहुवचनं 'मनःसंक्षोभकारकान्' इति तद्विशेषणं च 'स्थूलमालम्बनं चित्तस्ये'ति वितर्कशब्दस्यार्थं निरस्यत एव। वितर्कशब्दस्यार्थं निश्चेतुं नितरां महत्त्वपूर्णोऽयं संदर्भः। अस्यापि विवेचनं पातञ्जलयोगोक्तवितर्कशब्दार्थं परामृश्याग्रे करिष्यते। विशुद्धि-मग्गादिषु बौद्धदर्शनग्रन्थेष्वपि सवितर्कादिध्यानानां वर्णनमुपलभ्यते। तत्र यद्यपि चित्तस्य विविधान्यालम्बनानि ध्यानोपयोगीनि वर्णितानि तथापि न तानिवितर्कशब्देनोक्तानि। यत्किमपि वा भवत्वालम्बनं प्रथमं ध्यानं सवितर्कमेवेति तत्रोक्तम्। एवं च बौद्धदर्शने वितर्कशब्दो न क्वचिदपि 'चित्तस्यालम्बन'मित्यनेनार्थेन प्रयुक्तः।

अथ पातञ्जलयोगसूत्रेषु वितर्कशब्दस्य प्रयोगान् पश्यामः। तत्र हि द्वयोर्भिन्नसंदर्भयोर्वितर्कशब्द उपलभ्यते। संमूढाश्च टीकाकारास्तयोः परस्परसंबन्धविषये। प्रथमं तु समाधिपादे संप्रदानयोगसंदर्भे वितर्कशब्दः प्रयुक्तः पतञ्जलिना 'वितर्कविचारानन्दास्मितानुगमात् संप्रज्ञातः' (यो. सू. १-१७)इति। अत्र वितर्कश्चित्तस्यालम्बने स्थूल आभोग इति भाष्यकारः। स्थूल आभोग इति चतुर्भुजविष्णुमूर्त्यादिरिति वाचस्पतिः। भोजमतेन त्विन्द्रियाणामपि स्थूलालम्बने समावेशः। भूतेन्द्रियविषये स्थूलकल्पना वितर्का इति विज्ञानभिक्षुस्तदनुसारं च भावागणेशनागोजी-भट्टौ। संप्रज्ञातयोगस्य सर्वास्ववस्थासु ध्यानालम्बनं तदेव तिष्ठतीति साधूक्तं विज्ञानभिक्षुणा। परं पतञ्जलिप्रोक्तो वितर्कशब्दार्थस्तेनापि नात्र स्वीकृतः।

प्रथमपाद एव समापत्तिसंदर्भे सवितर्कनिर्वितर्कसमापत्त्योर्वर्णनं कृतं पतञ्जलिना। शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का समापत्तिः, स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा च निर्वितर्केति लक्षयति पतञ्जलिः ( यो. सू. १.४२, ४३ )। अत्रापि द्वावप्येतौ वितर्कानुगत-

योगस्य भेदाविति विज्ञानभिक्षोर्मतं समञ्जसमेव। किं तु, यदि वितर्को नाम स्थूलमालम्बनं चित्तस्य, तद्विषये वा स्थूलकल्पना न हि साऽनुगमनेन दूरीभविष्यति। न चालम्बनरहिता निर्वितर्का समापत्तिः। न चास्मिन्नभ्युपगमे स्मृतिपरिशुद्धिशब्दः साभिप्रायः। परिशुद्धिशब्दस्य केवलमपगम इत्येवार्थं परिगृह्णन्ति टीकाकाराः। न च समञ्जसोऽसौ। अतः परिशुद्धिशब्दस्य यथार्थाभिप्रायोऽत्र जिज्ञासितव्यः। स च स्वयं पतञ्जलिना प्रोक्ते वितर्कशब्दार्थे परिगृहीत एव स्पष्टीभवति। पतञ्जलिना हि यमनियमसंदर्भे वितर्काः परिभाषिता द्वितीये पादे। 'वितर्कबाधने प्रतिपक्षभावनम्' (यो. सू. २.३३) 'वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम्।' (यो. सू. २.३४) इति' अत्र हि हिंसादयो वितर्कशब्देनोक्ताः पतञ्जलिना। कथमेते वितर्काः साधकं बाधन्ते योगाभ्यास इति तावत्पश्यामः। अत्रैतद् वेदितव्यं यद्योगाङ्गानां सिद्धौ सर्वत्र पौर्वापर्यं नैवोक्तं पतञ्जलिना। नहि यमनियमसिद्धिभागेवासनादिभ्योऽधिकारी। तथा सति कदाचिदेव कश्चिद् भवेदधिकारी तेभ्यः। यत्र हि क्रमोऽभिप्रेतस्तत्र स्वशब्देनैवोक्तः पतञ्जलिना यथा 'तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः' (यो. सू. २.४९) एवं च यमनियमेष्वप्रतिष्ठोऽपि यथासंभवं यमनियमानाचरन् यदा ध्यानाभ्यासं प्रारभते तदा वितर्का बाधितुं प्रारभन्ते। यतो निरुध्यमानासु परिदृष्टचित्तवृत्तिष्वपरिदृष्टचित्तभागे ( unconscious mind ) विलीनाः संस्कारवासनाः प्राबल्येनोत्तिष्ठन्ति। एताश्च मृदुस्वरूपा मध्यस्वरूपा अधिमात्रस्वरूपा वा भवन्ति। परिदृष्टचित्ते चैता विस्मृतिवशं नीताः सत्यो ध्यानाभ्यासवशादेव स्मृतिपथमायान्ति। चित्ते संक्षोभं च जनयन्ति। हिंसादिभ्यो निर्वर्तितुं प्रयतमानोऽपि साधक एतासामुद्भवेन चिन्ताकुलो भवति। तथापि ततः प्रगतिरेव भवति साधकस्य। यतः परिदृष्टचित्तभागे प्राप्ता एताः प्रतिपक्षभावनया निष्कासयितुम् अपि शक्यन्ते। योगाभ्यासपरः साधकस्तासां दुःखाज्ञानानन्तफलत्वं द्रागेव जानाति। एवमेव प्रतिपक्षभावनया स्मृतिपरिशुद्धिर्भवति। ततश्च साधको निर्वितर्कायाः समापत्तेरधिकारी भवति।

एतत् खलु बुद्धचरितस्थाराडोपदेशादप्यधिगन्तुं शक्यते। तत्रापि

---

वितर्कवद्ध्यानवर्णने व्यापादादिभ्यो विविक्तमित्युक्तम् । व्यापादशब्दश्च हिंसापर्याय एव । सवितर्कध्याने पार्थक्येनैतासां हिंसादिवासनानां प्रत्ययो जायते । ततश्च चित्तसंक्षोभकारकानेतान् वितर्कान् ज्ञात्वा साधको निर्वितर्कध्यानावस्थां प्रविशति । अतो भाष्यकारादिभिः स्वीकृतस्य 'स्थूलमालम्बनं चित्तस्ये'ति वितर्कशब्दार्थस्यासामञ्जस्यं स्पष्टीभवति ।

तथा च भाष्यकारादिभिः स्वीकृतं समाधिसमापत्तिशब्दयोरेकार्थत्वमप्यनेन निरस्तं भवति । न हि सवितर्कं ध्यानं कदापि समाधिशब्दवाच्यं भवितुमर्हति । पतञ्जलिना तृतीये पादे 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधि'रिति ( यो. सू. ३.३ ) यत्समाधेर्लक्षणं कृतं तत एवैतद् व्यक्तीभवति । 'ता एव सबीजः समाधिः' (यो. सू, १.४६ ) इत्यनेन सूत्रेण तु नैव समापत्तिसमाध्योरेकत्वं प्रतिपादितमपि तु ता एव चतस्रः समापत्तयः सबीजे समाधौ पर्यवस्यन्तीत्येतदेव लक्षितम् । समाधिरित्येकवचनमप्यस्यैव निदर्शकम् । न खलु सवितर्कादयश्चत्वारः समाधयोऽपि तु समापत्तय एव । समापत्तिः खलु प्रक्रियात्मिका समाधिश्च स्थितिरूपः । समाध्यभिमुखं ध्यानमेव हि समापत्तिशब्दवाच्यम् । अत एव बौद्धदर्शनेऽपि सवितर्कादीनि ध्यानानि वर्णितानि न पुनः समाधयः । एवं सम्यगवधारिते सति योगशास्त्रस्य गहनमनोवैज्ञानिकतापि विशदीभवति । तदेतद् दिङ्मात्रमत्र प्रकटितं, विस्तरेण तु — Studies in the Patanjalayogashastra ( A Fresh Interpretation of Patanjali in the light of Defth Psychology ) इत्यस्मिन् पुस्तके प्रतिपादयितुकामोऽस्मि । इति शम् ।

अलीगढ-विश्वविद्यालयः
अलीगढ ( उत्तरप्रदेश )

डॉ. चिन्तामणि त्र्यम्बक केङ्घे

॥ श्रीः ॥

नमस्ते सवयसे वसन्तरायाय।

शारदा-नियतकालिकस्य द्वादशवर्षे पदार्पणं भवति इति बहुलं प्रमोदम् अनुभवामि।

किञ्च, अस्मिन्नेव शुभावसरे अस्मत्सुहृदा गजाननरायेण लिखितं 'श्रीविवेकानन्द-चरितं प्रकाश्यते एतच्च मणिना काञ्चनसंयोगः इति कमपि परमानन्दं कथं नु प्रकटीकुर्याम् ? शब्दाः पलायिताः। आनन्द एव एतत्पत्रे प्रस्रवति।

सर्वथा ईदृश एव प्रकर्षः, प्रहर्षः च सर्वैरस्माभिः इत उत्तरं बहुवारम् अनुभूयताम् इति शम्।

पुणे विद्यापीठ, पुणे ७ तः
२२ जानेवारी १९७१

भवदीयः
**शान्तारामो जोगः**

---

। ॐ नमः शिवाय।

अयि पण्डितवर्याः वसन्त गाडगीळमहोदयाः।

चित्रं संस्कृतभाषेयं शासनस्य न हि प्रिया।
शिक्षाभ्यासक्रमात्तस्मात् ज्ञानतः समुपेक्षिता॥ १

अहो अमरवाणीयं हन्तुं शक्तो न कोऽपि ताम्।
विहाय सा महाराष्ट्रम् अन्यप्रान्तेषु वर्धते॥ २

भवान् गीर्वाणभाषाया निष्ठावान् समुपासकः।
तस्या नित्यं प्रसारार्थं सानन्दं यतते भवान्॥ ३

कविवाडा—दिल्ली दरवाजा मैदान,
अहमदनगर

**का. र. वैशंपायन**

॥ श्रीः ॥

म. म. द. वा. पोतदार–अशीत्यब्दीपूर्तिसत्कार-समारोह-समित्या समर्पितं

# मानपत्रम्

स्वस्ति ।

भारत-भू-भूषणभूताः पुराणपुरुषाः महामहोपाध्यायाः दत्त-आत्रेयाः अत एव अजातशत्रवः निरवद्यगुणोदाराः पोतदाराः अद्य वयसः अशीति-वर्षाणि यशोऽन्वितान्यतिक्रम्य प्रज्ञोत्साहसमन्विता एव एकाशीत्यां पदं प्रतिष्ठापयन्तीति अमन्दानन्दसंदोहयुतेयं समितिः अखिल-पुण्यपत्तननिवासिनां परसौभाग्यवशात् समधिगतेऽस्मिन् सुमङ्गलावसरे श्रीमतः पोतदार-महाशयान् सादरं साभिवादनं च भूयो भूयः सभाजयति ।

तपसा तेजसा त्यागेन च प्राचीनर्षिभ्यो नातिभिन्नाः अत एव प्रातः-स्मरणीयचरित्राः, निशिततरशेमुषीका परिणतप्रज्ञा विचक्षणा अपि कुसुम-कोमलचेतसो लोकोत्तरविनयोपेताः, सकललोकविलक्षणा अपि लोक-कल्याणकारिणः जनसुहृदः, प्राचीनविद्यारक्षणदक्षिणा इतिहासाचार्या अपि कालानुरोधिनः समयज्ञाः वर्तमाननिष्ठाः, महारम्भेषु कृतधियोऽपि निराकुलाः स्थितप्रज्ञाः, वाग्ग्मिप्रवरा अपि परिहासपेशलाः, भारतभूषणाय-माणानां नैकासां संस्थानां जीवातुभूता अपि न्याय्यस्य च पथ्यस्य च वक्तारः, अप्रतिमप्रतिभावत्सु धौरेयाः, संशोधनैकधनेषु अग्रगण्याः, सार्व-जनीनानां कार्याणां सुदृढाः आश्रयाः, अधिगतसकलाधिगन्तव्यार्थाः सुचरित-निकषाः, शिक्षितादर्शाः, महामहोपाध्यायाः पोतदारमहाशया इति दिक्षु विदिक्षु विश्रुतचरमेतत् ।

महाराष्ट्रधर्मस्य महाराष्ट्रसंस्कृतेश्च मानदण्ड इव स्थिताः, अन-भिषिक्ताः महाराष्ट्रमण्डलाखण्डलाः श्रीमन्तः पोतदारमहाशयाः । एभ्य एव आचारप्रयतेभ्यः सकाशात् स्वं चरित्रं मानवा शिक्षेरन्निति नात्युक्तिः।

परममङ्गलेऽस्मिन्नवसरे एतदेवाशास्यं यद् जगन्नियन्तुः परमेशितुः सान्द्रतरकृपाकटाक्षवशात् लभन्तां श्रीमन्तः पोतदारमहाशयाः निरामय-संपद्भूषितं क्षेमयुतं यशसान्वितं पुरुषायुषम् । जेजीयतां च तदाश्रयः महाराष्ट्रधर्मध्वजः इति शम् ॥

पुण्यपत्तनम् ३०<br>श्रावण कृष्ण ५, १८९२

म. म. प्रा. दत्तो वामन पोतदार-<br>अशीत्यब्दीपूर्ति-सत्कार-समारोह-समितिः

न वयं पिपासवः !

## केद्र-शासन-संयोजिता समस्या-पूर्ति-स्पर्धा... निर्णयः

क्र. १ ... रू. १७५

गुरोर्हि कार्याय सदा महोदधौ पदं क्षिपाम्यत्र न दुःखमस्ति मे ।
अतश्च कुम्भोदर! रुद्रकिङ्कर ! दयाब्धि बन्धो ! न वयं पिपासवः ।।

वाराणसी — **अनिरुद्धप्रसादः त्रिपाठी**

क्र. २ ... रू. ७५

मदमत्ताः निहताः हि शत्रवस्त्वथ गुरवः प्रतिगन्तुमुत्सुकाः ।
कथयन्ति जनान् हि कातरान् बहुतृप्ताः न वयं पिपासवः ।।

पुण्यपत्तनम् — **बहुलकर श्रीकान्त शंकर**

क्र. ३ ... रू. ५०

अमृतादधिकोऽस्तु ते रसः निखिलैरमरैरपीच्छितः ।
तृप्तिरास्यपरिपीडनान्न चेत् अधरामृत न वयं पिपासवः ।

पुण्यपत्तनम् — **रामचन्द्र सदाशिव डिम्बळे**

---

## ब्राह्मण-सभा, मुम्बई सांस्कृतिक-समितिः
## संस्कृत-नाट्यमहोत्सवः – एप्रिल १९७१

स्थलम्-- रङ्गभवनम्, धोबीतलाव, मुम्बई १

### का र्य क्र म – प त्रि का

| | | | |
|---|---|---|---|
| १३-४-७१ मंगलवासरे | : | सायं. ७-३० | नाटचमहोत्सवस्य उद्घाटनम् |
| | | | स्मरणिका-प्रकाशनम् |
| | | रात्रौ ८-०० | **अभिज्ञान-शाकुन्तलम्** |
| १४-४-७१ बुधवासरे | : | रात्रौ ८-३० | **वेणीसंहारम्** |
| १५-४-७१ गुरुवासरे | : | सायं. ६-३० | व्याख्यानं सत्कारश्च |
| | | ,, ७-४५ | **"नाटचवाचनम्"** |
| | | | – प्रा. रमेश खेर |
| १६-४-७१ शुक्रवासरे | : | रात्रौ ८-३० | **मुद्राराक्षसम्** |
| १७-४-७१ शनिवासरे | : | रात्रौ ८-०० | **संगीतं शारदम्** |
| १८-४-७१ रविवासरे | : | सायं. ७-३० | **संगीतं सौभद्रम्** |
| १९-४-७१ सोमवासरे | : | सायं. ६-३० | व्याख्यानं सत्कारश्च |
| | | ,, ७-४५ | **"जयतुभारती"** |
| | | | पोवाडा-गायनम् |
| | | | –शाहीर वसंत नानिवडेकर |
| २०-४-७१ मंगलवासरे | : | रात्रौ ८-३० | **संगीत-भर्तृहरीयम्** |
| २१-४-७१ बुधवासरे | : | रात्रौ ८-३० | **पृथिवीवल्लभम्** |
| २२-४-७१ गुरुवासरे | : | सायं. ६-३० | व्याख्यानं सत्कारश्च |
| | | | **"अष्टपदी-गायनम्"** |
| | | | –सौ.सुहासिनी मुळगांवकर |
| २३-४-७१ शुक्रवासरे | : | रात्रौ ८-४५ | **रत्नावली** |
| २४-४-७१ शनिवासरे | : | रात्रौ ८ | **भ्रातृकलहम्** |
| २५-४-७१ रविवासरे | : | सायं. ७-३० | **संगीत-संशयकल्लोलम्** |

२६–४–७१ सोमवासरे : सायं. ६–३० व्याख्यानं सत्कारश्च
" ७–४५ "**कर्णभारम्**"
(बाल-नटानाम्)
दिग्दर्शकः
वसन्तराव नानिवडेकर

२७–४–७१ मंगळवासरे : रात्रौ ८ **उत्तररामचरितम्**

२८–४–७१ बुधवासरे : रात्रौ ८–४५ **मालविकाग्निमित्रम्**

२९–४–७१ गुरुवासरे : सायं. ६–३० समारोपः,-धन्यवादाः
आभार प्रदर्शनम्
सायं. ७–४५ **संगीतं मृच्छकटिकम्**

* * * * * * * * *

**पूर्णोत्सव-पत्रिका**– (व्यक्तिद्वयस्य कृते विशेषासनम्)

रूप्यकाः ५००, ३५०, २५०.

आरक्षितम् आसनम् रू. १००, ७५, ५०, २५.

अनारक्षितम् आसनम् रू. १५, रू. १०.

शास्त्रि-पण्डितानां, शिक्षक-प्राध्यापकानां कृते
न्यूनमूल्येन रू. ७० (१००), ५१ (७५), ३० (५०)
छात्राणां कृते रू. ११ (१५), ६ (१०)

नगरान्तराद् आगस्तुकामैः कृपया **प्र. पां. जोशी, ब्राह्मणसभा, मुम्बई ४**

इति नाम्ना पत्रेण समूल्यं स्वनामाङ्कनं प्रेषणीयम् ।

**रा. ग. गोरे**
कार्यवाहः
सांस्कृतिक-समितिः

**कृ. मो. भाटवडेकर**
**ना. रा. बर्वे**
कार्यवाह ब्राह्मण-सभा

नियोजित-परिवारः....प्रसन्न-परिवारः

## तत्रैव सुखसौन्दर्यम् ....

नियोजित परिवार सुखी परिवार होता है। इससे सबको भरपेट खाना, अच्छे कपड़े और अच्छी शिक्षा मिलती है — वास्तव में, जिन्दगी की हर आवश्यकता को अच्छी तरह से पूरा किया जा सकता है। बच्चों के जन्म में समानान्तर लाइये और अपने परिवार को छोटा रखिये।

परिवार नियोजन के लिये आपको परिवार कल्याण नियोजन केन्द्रों से मुफ्त सलाह और सेवा मिल सकती है। इन केन्द्रों को इन पर लगे 'लाल तिकोन' के निशान से पहचाना जा सकता है।

नियोजित परिवार
प्रसन्न
परिवार



# सुख सौन्दर्य है वहां
# सीमित सन्तति है जहां



....यत्र सीमित-संततिः

नियोजित-परिवारः....प्रसन्न-परिवारः

प्रसन्न परिवारः

नियोजित परिवारः

## आचार्यरूपाय नमः शिवाय

विसृज्य सृष्टिं सुमनोऽभिरामां
वेदादि विद्याः सकलाः कलाश्च ।
ब्रह्माऽभवद् व्यग्रमनाः क एताः
संधार्य संरक्षति जीवनाय ।। १

कलाः सकष्टा गहनार्थवेदाः
सत्यं परब्रह्म न बुद्धिगम्यम् ।
रहस्य-विश्लेष-निबोधनाय
को नाम शक्तोऽस्ति परार्थदर्शी ।। २

लोकस्य कल्याणकरो विधाता
जगाम विष्णुं शरणं शरण्यम् ।
ततश्च तौ विष्णुविधी महेशं
गङ्गेन्दुगौरी करुणारसाङ्गम् ।। ३

जानामि लोके मनुजस्वभावं
ज्ञातेऽपि तत्त्वे स्खलनप्रवृत्तिः ।
आचार्यरूपैर्विचरामि विश्वे
जीवन्ति विद्या हि गुरूपदेशे ।। ४

गुरुस्वरूपो ननु नीलकण्ठः
श्रीशङ्करो यस्य पिता च साक्षात् ।
कुलं पवित्रं न-वरं वरेण्यम्
आचार्यरूपाय नमः शिवाय ।। ५

१० म. गान्धी-मार्गः
विलेपार्ले (पूर्व),
मुम्बई ५६.

ल. वि. देशपांडे
दत्तजयन्ती
१२-१२-७०

---

नवरं-नान्यद् वरं यस्माद्

॥ श्रीः ॥ दि. १८-१-७१

श्री. बिराजदारमहाशयेभ्यः नमो नमः।

शारदा-मासिकस्य डिसेम्बर १९७० मासस्य अङ्के पत्ररत्न-मञ्जूषायां भवतां पत्रं मुद्रितमस्ति। तस्मिन् पत्रे भवद्भिः मह्यं 'नमो नमः' कृतम्। अतः अहं कृतज्ञोऽस्मि। भवतां मम च चिरपरिचयः नास्ति, केवलम् एकवारं द्विवारं वा शारदा-कार्यालये भवद्भिः सह मम स्वल्पं संभाषणमभूत्। तथापि तत् संस्मृत्य 'नमो नमः' इति शब्दद्वयेन भवद्भिः मत्कृते यः आदरः तस्मिन् पत्रे दर्शितः, तेन मम मनसि भवत्संबन्धी परमादरः समुत्पन्नः। दिष्टया वर्धताम् आवयोः स्नेहः।

अहं सेवानिवृत्तः मुद्रितशोधकः (Proof-Corrector) अस्मि। 'केसरी'-कार्यालये अन्येषु च केषुचित् मुद्रणालयेषु चत्वारिंशतं (४०) वर्षाणि सेवां कृत्वा अहमधुना सेवानिवृत्तः जातः।

गीर्वाणभाषा मे अतीव रोचते। तस्याः व्याकरणस्य (पाणिनीय-व्याकरणस्य) मया किञ्चित् अध्ययनं कृतम्। परं गीर्वाणभाषायां वक्तुं नाहमलम्। लेखनं तु किञ्चित् करोमि। एष मम अध्ययनस्य व्यवसायस्य च परिचयः।

सायंकाले प्रतिदिनं यत्र कुत्रापि गन्तुम् अक्षमः शारदा-कार्यालये गच्छामि तत्र च पं. गाडगीळमहाशयानां संस्कृत-प्रचारार्थं यः महान् उद्योगः वर्तते तं कौतुकेन अवलोकयामि।

अहमधुना नवषष्टिवर्षदेशीयः (69 years old) अस्मि। वार्द्धक्यं शरीरे मनसि च पदं करोति। तथापि अनामयः अस्मि।

भवन्तः जात्या मुसलमानाः। तथापि भवतां संस्कृतवाक्पाटवस्य लेखनकौशल्यस्य च वर्णनं वृत्तपत्रेषु दरीदृश्यते। तत् वाचयित्वा महत् कुतूहलं जायते सर्वेषां मनसि। संस्कृत-प्रसारार्थं बद्धपरिकराणां भवतां सानन्दम अभिनन्दनं करोमि। अस्तु। अलमतिविस्तरेण। भवतां पत्रोत्तरमपेक्षे।

'शारदा कार्यालयः,' उद्यान-प्रासादः
सदाशिव पेठ, पुणे ३०

भवदीयः
त्र्यं. रा. दामले

॥ श्रीः ॥ २८-१-७१

परमादरणीयेभ्यः श्रीमद्भ्यः दामलेमहाभागेभ्यः,

सश्रद्धं सविनयं नमो नमः ।

भवतां पत्रम् प्राप्तम् । पत्रोत्तरार्थं विलम्बः जातः । यतः अहम् अस्माकं शालायाः विहरणकार्ये व्यग्रः आसम् । अतः क्षन्तव्यः भवद्भिः ।

भवन्तः मम पितृसमाः । अतः आदरणीयाः एव । 'नमो नमः' इति शब्दद्वयेन एव भवद्भिः पत्रलेखनस्य कृपा कृता, अभिनन्दनरूपेण आशीर्वादः अपि मम संस्कृत-प्रचारकस्य उत्साहं द्विगुणीकर्तुं प्रेषितः । अतः अहम् उपकृतः अस्मि । अनुगृहीतः अस्मि । एवम् एव भवतां कृपापत्रम् अपि वारं वारं प्रेषणीयं भवतु इति मनसा प्रार्थना ।

अहं मुस्लीमः । सय्यद-वंशीयः । संस्कृतस्य कृते अपि मुस्लीमानाम् अपि विरोधः न विद्यते इति उदाहरणम् एव मम रूपेण अपि विस्तृतं भवतु इति ईश्वरेच्छा ।

यतः अस्य मासस्य तृतीये दिनाङ्के शिवसेना-प्रमुख-बाळासाहेब-ठाकरे-महाभागानाम् आध्यक्षे सभा मुम्बापुर्याम् अभवत् । तस्यां सभायाम् मम भाषणं संस्कृतभाषायाम् एव अस्खलितम् आकर्षकम् उत्साहवर्धकम् विषयानुरूपम् अतिसुन्दरं च जातम् । वारं वारं करतालिकाः नादिताः । मम एतादृशं भाषणं कथं जातम् इति अहम् अपि नैव जाने । इदम् एकम् आश्चर्यम् एव । अतः अत्र अपि ईश्वरेच्छा एव इति निःसंशयम् । श्रीमतीभ्यः अर्जुनवाडकर-महाभागिनीभ्यः मम प. पू. आचार्यानीभ्यः च सादरं सश्रद्धं नमो नमः ।

ह. जंगलीपीर दर्गा
वरळी, मुम्बई १८

भवदीयः कृपाभिलाषी
**गुलामदस्तगीर बिराजदार**

विद्वत्सु विज्ञाप्यते ।

## संस्कृत-भाषा-प्रचारिणी सभा चित्तूर (आन्ध्र)

संस्कृतभाषाप्रचारिण्यास्सभायाः रजतोत्सवसन्नाहः प्रचलति । उत्सवविशेषांकश्च संमुद्र्यते । तत्परिपूर्तिमधिगत्य उत्सवदिनादिनिर्णयः क्रियेत । मन्ये प्रायशः द्वित्रमासे स महोत्सवः निर्वर्त्येतेति ।

तत्संदर्भे नवनवरचितानां प्रकाशितानां वा संस्कृतग्रन्थानां प्रदर्शनीमपि निर्वोढुं व्यवस्यति सभा । अतः कृपया संस्कृते नव-प्रकाशिताः, अप्रकाशिताः करलिपिरूपेण वर्तमाना वा ग्रन्थाः पत्रपत्रिकाश्च ( नागरी-तेलुगु-ग्रन्थ-कर्णाटकादि लिपिषु यासु कासुचिदपि वर्तन्ताम् ) प्रेषयित्वा प्रदर्शिनीं सविशेषं विभूषयन्त्विति प्रार्थये ।

अपि च संस्कृतप्रचारसामग्री तत्तत्संस्थाभिरुपयोज्यमाना सापि प्रेषणीया ।

यद्यपि महान् ग्रन्थराशिः नवनिर्मिता वर्तते भारते, तथापि तत्तद्रचयितृसंकेताद्यपरिज्ञानात् प्रत्येकं प्रार्थने अशक्ता वयं एतद्विज्ञापन-द्वारा अभ्यर्थयामहे यथाशक्ति सहयोगदानाय ।

केचिच्च महानुभावा ग्रन्थान् प्रेषितवन्तः तेभ्यः धन्यवादाः ।

प्रार्थयिता,

संस्कृत-प्रचारिणी-सभा — ति. कं. तिरुवेङ्कटाचार्यः,
चित्तूरु (आन्ध्र) — प्रधानमन्त्री.

---

## सुरभारती–मासिकी सभा

दशमी सभा मार्च २७।३।१९७१

विषयः – न मातुः परदैवतम् ।

स्थलम् – श्री सोमैया-करमसीश्रेष्ठि-निवासः ।
‘ पद्मनाभ ’-१० कारमायकेलमार्गः
‘ उषा-किरण ’-समीपे, मुम्बई–२६

Centre of Advanced Study in Sanskrit
UNIVERSITY OF POONA
GANESHKHIND. POONA-7.
Telephone No. 54220.

सस्नेहं प्रणामाः ।

प्राप्तं भवताम् अभ्यर्थनापत्रम् । राजधान्यां २७-१-७१ दिनाङ्के डॉ. पळसुलेमहोदयैः प्रणीतस्य विवेकानन्दचरितस्य प्रकाशनं संपत्स्यते इति श्रुत्वा अहं मम प्रगत-संस्कृत-केन्द्र-सहकारिणश्च परमं संतोषम् अनुभवामः । इदं डॉ. पळसुलेमहोदयानां तथैव तेषां सहकारिणां सविशेषं प्रमोदावहमभिमानास्पदं च यदिदं विवेकानन्द-चरित-प्रकाशनं सुगृहीत-नामधेयानाम् उपराष्ट्रपतीनां करकमलाभ्यां संपत्स्यते इति । अस्माकं मनसि डॉ. पळसुलेमहोदयैः रचितेषु ग्रन्थेषु भ्रातृनिर्विशेषः प्रेमा वर्तते । चिकित्सकानामपि समीक्षकाणां मनसि डॉ. पळसुलेमहोदयानां कृतयः कमपि अनिर्वचनीयम् आनन्दसंदोहं जनयन्ति किमुत अस्माकं डॉ. पळसुले-महोदयानां पक्षपातिनाम् । अहो बहुकष्टसाध्ये गवेषणकार्ये स्थिरचित्ता अपि इमे– कथं सौकर्येण संस्कृतभाषायामाधुनिकविषया अपि आविष्कर्तुं शक्यन्ते– इति स्वीयेनाभिजातलेखनेन समर्थयाञ्चक्रुः । आयतौ काले इतोऽप्यधिकं तेषां लेखनं पुष्पितं फलितं भूयादितीशचरणयोरभ्यर्थना । अयं समारोहः निर्विघ्नं परिसमाप्नुतादिति प्रार्थयामहे ।

संचालकः संस्कृत-प्रगताभ्यास-केन्द्रम् भवदीयः
पुणे-विद्यापीठम्, पुणें ७ **रा. ना. दांडेकर**

## अग्रिमाङ्कः स्वर्गीय कन्हैयालाल मुन्शी-विशेषाङ्कः

मङ्गले (९–२–१९७१) मध्याह्ने अमङ्गल-वार्ता नभोवाण्या श्राविता । संस्कृत-संस्कृति-निष्ठः क्रियावान् पण्डितोत्तमः डॉ. मुन्शी कन्हैयालाल शिवलोकं गतवान् इति । शारदाकाराणां चिराय श्रद्धा भवनकार्ये । मानार्ह-प्राध्यापकपदम् अपि पुरा मण्डितम् अस्माभिः भवनस्य, मुन्शी-वात्सल्येन । संस्कृत-विश्व-परिषदः प्रायः सर्वेषु अधिवेशनेषु उपस्थिताः वयम् । कर्तव्यधिया 'शारदा' **मुन्शी-विशेषाङ्कं** प्रकाशयिष्यति एप्रिल १९७१ पूर्वार्धे । अधिकं प्रत्यक्षम्–– **संपादकः**

पुण्यपत्तन-नगर-छाटण-कार्यालयाय २६-३-७१ दिने समर्पितम्
शारदा-(पुण्यपत्तनम् ३०.) १२ : ८-९-१० * रजि. क्र.एम्.एच्. ५५७

* * * * * * * * * * * * * * * * * * * * * * * * *

भारत-शासनस्य वृत्तपत्र-विषयक-नियमम् अनुसृत्य फेब्रुवारीमासोत्तरं प्रथमाङ्के प्रकाशनीयं 'शारदा'-स्वामित्वादिविषयकं निवेदनम्।

(तुरीयं परिपत्रकम्-अष्टमः नियमः)

(१) प्रकाशन-स्थलम्—मुम्बई-पुणे
(२) प्रकाशन-समयः—पाक्षिकं सौर १, १६
(३) मुद्रक-नाम—वसन्त अनन्त गाडगीळ
(४) " – राष्ट्रियता—भारतीयः।
(५) " – निवासः—१७०।५ पर्वती, पुणे ९
(६) प्रकाशक-नाम-राष्ट्रियता-निवास ... पूर्ववत्
(७) संपादक- " – " – " ... "
(८) पत्रस्वामी- " – " – " ... "

अहं गाडगीळ अनन्ततनयः वसन्तः सविश्वासं प्रकटीकरोमि यद् 'उपरितनं शारदास्वामित्वादिविषयकं निवेदनं सत्यं विद्यते' इति।

दि. २७–२–७१

वसन्त अ. गाडगीळ
प्रकाशकः



* * * * * * * * * * * * * * * * * * * * * * * * *

संपादकः मुद्रकः प्रकाशकः स्वामी – वसन्त अनन्त गाडगीळ.
मुद्रणस्थलम् – यशवन्त मुद्रणालयः, १८३५ सदाशिव, पुण्यपत्तनम् ३०.
प्रकाशनस्थलम्-१. म.म.प्रा.द.वा.पोतदार,४९८ शनिवार, पुण्यपत्तनम् ३०.
२.–श्री.ल.म.चक्रदेव, ३१८ राममोहनमार्गः मुम्बापुरी ४.
कार्यालयः– खजिना-महाल-भवनम्, ४२५ सदाशिव, पुण्यपत्तनम् ३०.